# अथ प्रातिशाख्यप्रदीपशिक्षाऽऽरभ्यते

हेरम्बं विघ्नहर्तारं प्रणमामि सरस्वतीम्
ययोर्न्नमनमात्रेण विघ्नसङ्घो विनश्यति १
प्रातिशाख्यं च शिक्षाश्च सम्यगालोच्य यत्नतः
वैदिकानां सुबोधाय सम्यक्पाठस्य सिद्धये २
सदाशिवतनूजेन बालकृष्णेन धीमता
प्रातिशाख्यप्रदीपाख्या शिक्षा सम्यङ्निरूप्यते ३
अथ वेदाध्ययनप्रकारः । तत्र याज्ञवल्क्याः ।
प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम्
सावित्रीं चानुपूर्व्व्येण ततो वेदान्समारभेत् १
हस्तौ तु संय्युतौ धार्य्यौ जान्वोरुपरिसंस्थितौ
गुरोरनुमतिं कृत्वा पठेन्नान्यमतिर्भवेत् २
ऊरुभागे तृतीये तु करन्न्यस्याथ दक्षिणम्
प्रसन्नमानसो भूत्वा किञ्चिन्नम्रमधो मुखः ३
कूर्मोऽङ्गानीव संहृत्य हस्तदृष्टिर्दृढम्मनः
स्वस्थः प्रशान्तो निर्भीतो वर्णानुच्चारयेद्बुधः ४
नाभ्याहन्न्यान्न निर्हन्न्यान्न गायेन्न च कम्पयेत्
यथादावुच्चरेद्वर्णांस्तथैवैतान्त्समापयेत् ५
निवेश्य दृष्टिं हस्ताग्रे वेदार्थमनु चिन्तयेत्
सम्यगुच्चारयेद्वर्णान्हस्तेन च मुखेन च ६
स्वरश्चैव तु हस्तश्च द्वावेतौ युगपत्स्थितौ
हस्ताद्भ्रष्टः स्वराद्भ्रष्टो न वेदफलमश्नुते ७
न करालो न लम्बोष्ठो नाव्यक्तो नानुसिकः
गद्गदो बद्धजिह्वश्च न वर्णान्वक्तुमर्हति ८
चुलुन्नौका स्फुटो दण्डी स्वस्तिको मुष्टिकाकृतिः
एते वै हस्तदोषाः स्युः परशश्चेति सप्तमः ९
अथ करचालनक्रमस्तत्रैव अङ्गुष्ठस्योत्तरे पर्व्वे

तर्ज्जन्न्युपरि यद्भवेत्
प्रादेशस्य तु यो देशस्तन्मात्रं चालयेत्करम् १०
उदात्तं भ्रुवि पातेन प्रचयं नासिकाग्रतः
हृत्प्रदेशेऽनुदात्तं तु तिर्य्यग्जात्त्यादिकाः स्वराः ११
स्वरिते व्यङ्गुलं विद्यान्निपाते तु षडङ्गुलम्
उत्थाने तु नवाङ्गुल्यमेतत्त्स्वारस्य लक्षणम् १२
तथा च प्रतिज्ञा सूत्रे
हृद्यनुदात्तो मूर्द्धन्युदात्तः श्रुतिमूले स्वरित इति ।
अथ स्वरविचारः । तथा चोक्तम् । स्वर उच्चः
स्वरो नीचः स्वरः स्वरित एव च ।
स्वरप्रधानं त्रैस्वर्य्यं व्यञ्जनं तेन सस्वरमिति ।
अथोदात्तानुदात्तस्वरितस्वराणां लक्षणान्युच्यन्ते
तथा च प्रातिशाख्ये । उच्चैरुदात्तः १ ऊर्ध्वभागे
निष्पन्नः स्वर उदात्तसञ्ज्ञः स्यात् । यथा अग्ना
३ इ । उदात्तवानुदात्तः २ इत्येवमादयः ।
उदात्तप्रदेशाः । नीचैरनुदात्तः ३ अधोभागे निष्पन्नः
स्वरोऽनुदात्तः स्यात् । यथा । आर्षेयऽऋषीणाम्
। अनुदात्तप्रदेशाः । उदात्ताच्चानुदात्तं स्वरितम्
४ उदात्तादक्षरात्परं व्यञ्जनव्यवहितमनुदात्तमक्षरं
स्वरितं भवति । यथा स्वाहा हिस्म । हि ष्म्म
॥ निहितमुदात्तस्वरितपरम् ५ अनुदात्तमापद्यते
स्वरितं उदात्तपरं स्वरित परं च । उदात्तपरे यथा
स्वाहा सोमाय । स्वग्र्यायेति स्वः ग्याय ।
प्रसवेऽश्विनोः । परमेष्ठ्यभिधीतः । सुचीवेति ।
स्वरितपरे यथा स्वाहा स्वर्णार्क्कः । इत्येवमादयः ।
उभयवान्त्स्वरितः ६ ऊर्ध्वाधो भागे निष्पन्नः स्वरः

स्वरितसञ्ज्ञः स्यात् । यथा स्वः । धान्यमसि । अथ स्वरितस्यैवान्तर्भेदा अष्टौ स्वरा उच्यन्ते । तथा च याज्ञवल्क्यः । अष्टौ स्वरान्प्रवक्ष्यामि तेषामेव च लक्षणम् । जात्त्योऽभिनिहितः क्षैप्रः प्रश्लिष्टश्च तथाऽपरः १३ तैरोव्यञ्जनसञ्ज्ञश्च तथा तैरोविरामकः । पादवृत्तो भवेत्तद्वत्ताथाभाव्य इति स्वराः १४ इति । तत्र प्रत्येकलक्षणमुच्यते । तथा च प्रातिशाख्ये । एक पदे नीचपूर्वः सयवो जात्त्यः । एकस्मिन्पदे नीचपूर्वोऽनुदात्तपूर्वो यकारेण वा सहितो जात्त्यः स्वरः प्रत्येतव्यः । नीचपूर्व इति सम्भवद्विशेषणम् । अपूर्वोऽपि भवति । नीचपूर्वो यथा । धान्यमसि । कन्याऽ इव । अपूर्वो यथा स्वद्देवेषु । तथा च याज्ञवल्क्यः । एकपदे नीचपूर्वः सयवो जात्त्य इष्यते । अपूर्वोऽपि परस्तद्वद्धान्यं कन्या स्वरित्यपि १५ उदात्तादयः परे सप्त ७ उदात्तादयः परे सप्त स्वराः प्रत्येतव्याः । अभिनिहितक्षैप्रप्रश्लिष्टतैरोव्यञ्जन तैरोविरामपादवृत्तताथाभाव्याः । त्रयो नीचस्वरपराः ८ अभिनिहितक्षैप्रप्रश्लिष्टा नीचस्वरपराः । एदोद्भ्यामकारो लुगभिनिहितः ६ एकारौकाराभ् यामुदात्ताभ्याम्परोऽकारोऽनुदात्तो यत्र लुक् लुप्यते तत्राभिनिहितः स्वरो भवति । यथा तेऽप्सरसाम् । तेऽवन्तुं । व्वेदोसि । स्तुपोऽसि । तथा च याज्ञवल्क्यः । एओ आभ्यामुदात्ताभ्यामकारो रिफितश्च यः । अकारो लुप्यते यत्र तं चाभिनिहितं विदुः १६ अस्यापवादः । न देशेऽभवति १० देश इत्ययमेकारः अभवदित्यस्याकारे

लुप्तेऽप्यभिनिहितस्वरितो न भवति । यथा
देशेऽभवत् । युवर्णौ । यवौ क्षैप्रः ११ इश्च उश्च यु
यूवर्णौ उदात्तौ अनुदात्ते स्वरोदयौ यकारवकाराभ्यां
यथासङ्ख्येन युक्तौ यदा तदा क्षैप्रस्वरो भवति । यथा
त्रि अम्बकम् । त्र्यम्बकम् । व्वाजी अर्व्वन् ।
व्वाज्ज्यर्व्वन् । नु इन्द्र । न्विन्द्र । द्रु अन्नः ।
द्र्वन्नः । तथा च याज्ञवल्क्यः ।
इउवर्णौ यदोदात्तावापद्येते यवौ क्वचित्
अनुदात्ते परे नित्यं विद्यात्क्षैप्रस्य लक्षणम् १७
इवर्णऽ उभयतो ह्रस्वः प्रश्लिष्टः १२
ह्रस्व इकार उदात्तः परश्च ह्रस्व इकारोऽनुदात्तस्तयोः
परस्परप्रश्लिष्टे प्रश्लिष्टस्वरो भवति । यथा अभि
इन्धताम् । अभीन्धताम् । स्रुचीव । तथा च
याज्ञवल्क्यः । इकारो दृश्यते यत्र इकारेणैव संय्युतः
। उदात्तश्चानुदात्तेन प्रश्लिष्टो भवति स्वरः । १८
स्वरो व्यञ्जनयुतस्तैरोव्यञ्जनः १३ उदात्तात्पूर्वस्मात्परो
यः स्वरो व्यञ्जनयुतः स तैरोव्यञ्जनसञ्ज्ञकः स्वरो
भवति । यथा इडे । रन्ते । तथा च याज्ञवल्क्यः
। उदात्तपूर्वं य्यत्किञ्चिद्व्यञ्जनेन च संय्युतः । एष
सर्वबहुस्वारस्तैरोव्यञ्जनसञ्ज्ञकः १९
उदवग्रहस्तैरोविरामः १४
उदात्तावग्रहस्तैरोविरामसञ्ज्ञकः स्यात् । अयं च
समस्तपदेषु भवति । अवग्रहवचनात् ।
अवग्रहाभावे तु तैरोव्यञ्जन एव । यथा गोपताविति
गो । पतौ । यज्ञपतिमितियज्ञ । पतिम् । तथा च
याज्ञवल्क्यः । अवग्रहात्परो यस्तु स्वरितः

स्यादनन्तरम् । तैरोविरामं तं विद्द्यादुदात्तो यद्यवग्रहः २० विवृत्तिलक्षणः पादवृत्तः १५ स्वरयोरन्तरं विवृत्तिरुच्यते । तया लक्ष्यत इति विवृत्तिलक्षणः स पादवृत्तसञ्ज्ञो भवति । विवृत्त्या व्यवहित इत्यर्थः । यथा ध्रुवा असदन् । ध्रुवाऽअसदन् । का ईम् । काऽईम् । तथा च याज्ञवल्क्यः । स्वरे च स्वरिते चैव विवृत्तिर्दृश्यते यदि । पादवृत्तो भवेत्स्वारः श्वित्रऽआदित्येति निदर्शनम् २१ स्वरयोरन्तरे काले विवृत्तिर्य्यत्र दृश्यते । स स्वारः पादवृत्तः स्याद्काऽईमिति निदर्शनम् २२ उदाद्यन्तो न्यवग्रहस्ताथाभाव्यः १६ उदात्तादिरुदातान्तो नीचावग्रहस्ताथाभाव्यसञ्ज्ञकः स्वरो भवति । यथा तनूनप्त्रऽ इति तनू । नप्त्रे । तनूनपादिति तनू । नपात् । तथा च याज्ञवल्क्यः । उदात्ताक्षरयोर्म्मध्ये भवेन्नीचस्त्ववग्रहः । ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् २३ केषां चिन्मते नाष्टमस्तु ताथाभाव्यः कम्परूपस्य ताथाभाव्यस्य वाजसनेयिनां संहितापाठे निराकृतत्वात् । उक्तं च माध्यन्दिनशिक्षायाम् । औज्जिहायनकैर्म्मा ध्यन्दिनमतानुसारिभिः । अवग्रहो यदा नीच उच्चयोर्मध्यतः क्वचित् २४ ताथाभाव्यो भवेत्कम्पस्तनूनप्त्रे निदर्शनम् । पदपाठे भवत्येव कम्पो नाम स्वरस्तथा २५ इत्यष्टौ स्वराः सोदाहरणा व्याख्याताः । ऋजुं निहत्त्य प्रणिहन्यतऽ उदात्ते १७ ऋजुं स्वरितस्वरं निहत्य हस्तमनुदात्तवत् । ततोऽत्यन्तं निहन्यते नीची क्रियते

जात्याभिनिहितक्षैप्रप्रश्लिष्टा उदात्ते परभूते । यथा स्वः द्यौरिव । स्वर्द्यौरिव । प्रसवे अश्विनोः । प्रसवेऽश्विनोः । नि अत्रिणम् । न्यत्त्रिणम् । स्रुचि इव । स्रुचीवेति । उदात्त इति कस्मात् । धान्यमसिं । व्वैष्णव्व्यौ । प्रचयस्वरलक्षणमाह । स्वरितात्परमनुदात्तमुदात्तमयमेकमनेकं वा १८ स्वरितात्परमनुदात्तमेकमनेकं वाऽक्षरमुदात्तवत् । एकश्रुत्या उच्चारणीयं स्यात् । अयमेव प्रचयः प्रचितः प्रचो निचित उदात्तमय इति वैदिकैर्व्यवह्रियते । हस्तं तु नासिकाग्रसम्मितं कृत्वा प्रदर्शनीयः । प्रचयन्नासिकाग्रत इति याज्ञवल्क्यशिक्षावाक्यात् । यज्ञपतिः । अद्यऽऋषऽआर्षेयः । नोदात्तस्वरितोदयम् २० स्वरितात्परमनुदात्तं उदात्ते स्वरिते वा परे प्रचयं न स्यात् । दृठ० हस्व मा । तनच्मि व्विष्णो । सादन्न्यंव्विदत्थ्यम् । उदात्तवानुदात्तः । स्वरितवान्त्स्वरितः । यत्र सूत्रद्वयस्य प्राप्तौ सत्यां विप्रतिषेधऽ उत्तरम्बलवद्भवति । यथा सूनवेऽग्ग्ने । अद्द्यूत्त्येऽवसे । स्वरविधायकं शास्त्रम् । अथ स्वरसन्धिरभिधीयते । सर्ठ०हितायाम् १ अधिकारोऽयम् । पदान्तपदाद्योः सन्धिः २ यदत्र सन्धिकार्यमुच्यते तत्पदान्तपदाद्योः स्यात् । स्वरे भाव्यन्तस्थाम् ३ अकरणठ्यो भावी । इत्यनेन सूत्रेण भावीसञ्ज्ञोक्ता । ते भावीसञ्ज्ञका इ उ ऋ ऌ स्वराः स्वरे परे अन्तस्था यवरलाः क्रमश आपद्यन्ते । उदाहरणं यथा पुनाम्यच्छिद्रेण । व्वाज्ज्यर्व्वा । व्वेत्त्वाज्यस्य । व्विभूर्म्मात्रा प्प्रभूः

पित्रा । लृकारोदाहरणं नास्ति संहितायाम् ।
सन्ध्यक्षरमयवायावम् ४ सन्धक्षरसञ्ज्ञकाः स्वरा ए
ओ ऐ औ स्वरे परे अय् अव् आय् आव्
एतानादेशानापद्यते । यथा इडऽएहि । अयादेशे
कृते यवयोः पदान्तयोः स्वरमध्ये लोपः ५ द्वयोः
स्वरयोर्मध्ये विद्यमानयोः
पदान्तयोर्य्यकारवकारयोर्लोपः स्यात् । सरस्वत्याऽ
इन्द्राय । व्विष्णो एते इति स्थिते अवादेशे कृते लोपे
च पूर्वसूत्रेण प्राप्तेऽग्रिमसूत्रेण निषेधः कृतः । न
वकारस्यासस्थान एकेषाम् ६ स्वरयोर्म्मध्ये
विद्यमानस्य वकारस्य पदान्तस्य लोपो न
स्याद्भिन्नस्थाने स्वरे परे यथा व्विष्णावेते ।
आनन्दनन्दावाण्डौ । असस्थान इति किम् ।
व्विष्णाऽ उरुगाय । ऊरू पादाऽ उच्येते ।
कण्ठ्यऽऋकारे ह्रस्वम् ७ कण्ठ्य स्वरऋकारे परे
ह्रस्वं स्वरमापद्यते । त्वऽऋभुमते । सिठ्ं० सवर्णे
दीर्घम् ८ सिम्सञ्ज्ञकः स्वरः सवर्णे परे पूर्वः परश्च
एकं दीर्घमापद्यते । यथा नारातये । स्वाहाग्नये ।
यौमीदम् । पचन्तूषे । अत्र स्वरे भाव्यन्तस्थामिति
प्राप्ते विप्रतिषेध इत्यनेन परत्वादिदमेव भवति ।
कण्ठ्यादिवर्णऽ एकारम् ९ कण्ठ्यात्पर इवर्णपूर्वः
परश्चैकारमापद्यते । जयेन्द्राय । एदम् । उवर्ण
ओकारम् १० कण्ठ्यात्पर उवर्णः पूर्वश्च
एकमोकारमापद्यते । इहोर्ज्जम् । प्रोहामि ।
सन्ध्यक्षरमैकारौकारौ ११ कण्ठ्यात्स्वरात्परं
सन्ध्यक्षरपूर्व एतौ ऐकारौकारौ आपद्येते । यथा

भ्राजायैष ते । इन्द्रेणैन्द्रम् । ओजिष्ठौजिष्ठः । प्रौक्षन् । समुद्रस्येमंस्त्वेमंस्त्वोद्मन्निति च । एते निपात्यन्ते । अन्यथा प्राप्तस्य अन्यथोच्चारणं निपातनम् । यथा अपां पृष्ठे समुद्रस्येमन् । अपान्त्वेमन् । अपान्त्वोद्मन् । नपरकालः पूर्व्वकाले पुनः १२ जातः परकालो विधिः पूर्वकाले विधौ प्राप्ते सत्यसिद्धः स्यात् । तऽ इह श्रुवन्तु । पादाऽ उच्येते । अराध्याऽएदिधिषुः पतिम् । रात्र्याऽऋक्षः । अत्र यवयोः पदान्तयोरित्यस्य परकालत्वात्तस्मिञ्जाते पूर्वकालं यथायथं प्राप्तं सन्धिकार्यं न भवति । आरमृकारोऽपृक्तात् १३ अपृक्तात्परऋकारः पूर्वश्च एकमारमापद्यते ॥ कण्ठ्य ऋकार इत्यस्यापवादः । यस्यावश्यं प्राप्तौ सत्यां यो विधिरारभ्यते स तस्यापवादः यथा स्वपनमार्त्यै । एदोद्भ्यां पूर्वमकारः १४ एदोद्भ्यां परो अकारः पूर्वश्च एकमेकारं ओकारं वाऽऽपद्यते । एतत्प्रकरणे यानि विसर्गान्तानि पदानि तेषां सर्व्वो अकार ओकारं इत्यनुवर्त्तमाने अकारे चेति वक्ष्यमाणसूत्रद्वयेन च ओकारान्तत्वम् । उदाहरणं यथा अग्नयेऽनीकवते । अग्नेदब्धायोऽशीतम । प्रकृतिभाव ऋक्षु १५ ऋक्षु नियताक्षरच्छंदस्सु मन्त्रेषु एदोद्भ्याम्परो अकारः प्रकृत्या भवति । एदोद्भ्यामित्यस्यापवादः । यथा गर्ब्भेऽअन्तः । व्वायोऽअस्मिन् । यजुष्षु च १६ अनियताक्षरेषु अविशेषेण एकारौकाराभ्यां परः अकारः पूर्वश्च एकारमोकारं वाऽऽपद्यते । यथा अग्रेपुवोऽग्रे । च मेऽपानः । चकारादृक्ष्वपि क्वचित् ।

योऽसावादित्त्ये पुरुषः सोऽसावहम् । का ध्रुवीती सदना होतारा ज्या स्वधा पृथिवी प्रतिमेमसदन्नश्यामाकर्मोर्द्ध्वमियमवस्तादुतास्तिषु १७ कादीनि नव पदानि यथासङ्ख्यं इमादिषु नवसु परेषु प्रकृत्या भवन्ति । काऽईम् । ध्रुवाऽअसदन् । ऊतीऽअश्याम् । सदनाऽअकर्म्म होताराऽऊर्द्ध्वम् । ज्याऽ इयम् । स्वधाऽअवस्तात् । पृथिवीऽ उत द्यौः । प्रतिमाऽअस्ति । प्रगृह्यं स्वरे १८ प्रगृह्यसञ्ज्ञकं पदं स्वरे परे प्रकृत्या भवति । इन्द्राग्नीऽ अपात् । इन्द्रवायूऽ इमे । शिप्रेऽअवेपयः । अस्म्मेऽआरात् । त्वेऽइषः । अमीऽअग्न्यः । उकारोऽपृक्तोऽस्प्पर्शात् १९ पूर्वेण भावे नियमार्थं व्वचनम् । अपृक्त उकारः स्पर्शात्परत्वाभाव एवप्रकृत्या । एतवाऽ उऽ अञ्जि । अस्पर्शात्किम् । तद्द्वन्तिके । सम्वेतद्द्धामि । न रोदसीमे २० रोदसी इत्येतद्द्विवचनान्तं पदमपि प्रकृत्त्या न भवति इमे शब्दे परे ऽ रोदसी मे राये । इत्यष्टौ स्वराः सोदाहरणा व्याख्याताः । अथाङ्गुलिभिः प्रदर्शनीयविषया व्याख्यावन्ते । तत्र व्यञ्जनानामिमे धर्माः सन्ति ह्येतस्मात्कारणादादौ व्यञ्जनसन्धिरुच्यते । तकारवर्गश्चकारवर्गे चकारवर्गम् १ तकारादयः पञ्च चकारादि पञ्चान्यतमे वर्णे परे चकारादीन्यापद्यन्ते । अत्र स्थान्यादेशयोर्यथासङ्ख्यम् निमित्तकार्यिणोस्तु न शकारे चेत्यस्याप्येतत् । सूत्रशेषत्वेन निमित्तानां षट्त्वात् । योगविभागस्तु तावत एव्नोत्तरसूत्रेऽनुवृत्यर्थः । यच्चाहम् । आच्छच्छन्दः

। अनूञ्जेषम् । शत्रूञ्जयतु । शकारे २ शकारे च परे तवर्गश्चवर्गमापद्यते । अदित्त्याञ्श्मश्रुभिः । परश्चास्पर्शपरश्छम् ३ तवर्गात्परः शकारश्छकारमापद्यते स्पर्शपरो न चेत् । चात्पूर्वश्चवर्गम् । यच्छूद्र्द्रे । कूश्माञ्छकपिण्डैः । अस्पर्शपरः किम् । पूर्वसूत्रोदाहरणं बोद्धम् । नुः ४ अधिकारोऽयम् । अनुनासिकमुपधा ५ अयमपि तथा । च छयोः शम् ६ चकारे छकारे च परे नकारः शकारमापद्यते । उपधा चानुनासिकम् । तांश्चक्रे । जटायां अवंश्छन्त्सि । तथयोः सम् ७ तकारे थकारे च परे नकारः सकारमापद्यते । उपधा चानुनासिकम् अश्म्मंस्ते । पशूंस्तान् । दधन्वान्त्स्ववान्यकारे लोपम् ८ अनयोर्नकारो यकारे परे लोपमापद्यते । नात्रानुनासिकोपधा । उक्तं च वसिष्ठशिक्षायाम् । स्वराणामानुनासिक्यं प्रतिजानन्ति सर्वदा । वर्जयित्वा तमाकारं यत्र लोपो विधीयते । दधन्वा यः । स्ववायातु । रयिवृधे च ९ रयिवृधे परे नकारो लोपमापद्यते । पीवोऽअन्नाररयिवृधः । नॄन्पकारे विसर्जनीयम् १० न्टृनित्त्यर्यं नकारः पकारे परे विसर्जनीयमापद्यते । अनुनासिका चोपधा । न्टृंऽ पाहि । शत्रून्परिधीन्क्र तून्वनस्प्पतीन्त्स्वरे रेफम् ११ एतेषां नकारः स्वरे परे रेफमापद्यते । अनुनासिका चोपधा । शत्रू १ रप । परिधीँ १ । रपोर्णु । क्रतूं१ । रनु । एते ह्येकार्द्धमात्रिका भवन्तीति पाराशरेणोक्तम् । आकारोपधो यकारम् १२ आकारोपधो नकारो

यकारमापद्यते स्वरे परे अनुनासिका चोपधा । यां २ । ऽआवहः । अत्र यवयोरित्यनेन लोपेऽपि न परकालः पूर्वकाले पुनरित्यनेन तस्यासिद्धत्वात्प्रकरणान्तरस्थत्वाच्चानुनासिकवर्ज्जनं न भवति ।
स्पर्शोऽपञ्चमः स्वरधौ तृतीयम् १३ प्रतिवर्गमाद्याः स्वरे धिसञ्ज्ञके च परे वर्गतृतीयमापद्यन्ते ।
ऋधगित्या । रेडसि । तदिदासम् ।
सङ्क्रमोदाहरणं । अनुष्टुबेवः । ऊर्ग्गसि ।
राडयन्त्री । तस्म्माद्यज्ञात् । त्रिष्टुब्जगती ।
अपञ्चमः किम् । युङ्ङसि । अस्म्मिन्यज्ञे । पञ्चमे पञ्चमम् १४ अपञ्चमः स्पर्शः पञ्चमे स्पर्शे परे पञ्चममापद्यते । वाङ्मात्त्या । व्वाङ्मात्त्या । यन्मे च्छिद्द्रम् । हश्च तस्म्मात्पूर्वचतुर्थम् १५
अपञ्चमात्परो हकारः पूर्वस्य चतुर्थमापद्यते चात्पूर्वस्तृतीयम् । व्वाग्घुतः । समसुस्त्रोद्धृदः ।
अवाड्ढव्यानि । अपञ्चमात्किम् ।
जीमूताघृदयौपशेन । अनुस्वारꣳ रोष्म्मसु मकारः १६ मकारो रेफे ऊष्मसु च परेष्वनुस्वारमापद्यते ।
अनुस्वारस्य ꣳमित्यादेशः शषसहरेफेषु ।
तेषामनुस्वारादीनामङ्गुलिभिः प्रकारो दर्शितवान्याज्ञवल्क्यः । मुष्ट्याकृतिर्मकारे तु नकारे तु नखग्रहः । ककारान्ते टकारान्ते ङणोऽधोऽङ्गुलिनामनम् १ पञ्चाङ्गुल्यं पकारे तु तकारे कुण्डलाकृतिः । ऊर्द्ध्वक्षेपाच्च योष्मास्यादधः क्षेपाच्च यो भवेत् २ एकैकामुत्सृजेद्धीरः स्वरिते तूभयं क्षिपेत् । स्वरितं यद्भवेत्किञ्चित्सवकारोष्मकं ततः ।

दीर्घं वा यदि वा ह्रस्वं निक्षेप उभयोरपि ३ जात्ये च स्वरिते चैव यकारो दृश्यते यदि । कर्त्तव्यस्तूभयोः क्षेपो व्वायव्व्यैरिति दर्शनम् ४ तथा च लघुमाध्यन्दिनीयशिक्षायाम् । कनिष्ठामोचनं कुर्य्यान्नीचे च प्रचये सति । नमः कूप्याय प्रथमो द्वितीयो जाग्रतस्तथा १ तर्जनीमोचनं कुर्यादुदात्ते तु विसर्गके । देवो घर्मस्तथा ह्रस्वे स्वरिते तूभयं क्षिपेत् २ अश्वो मर्त्त्यो भवेल्लक्ष्यं स्वारे दीर्घे कनिष्ठिकाम् । उभयोरपि ह्रस्वे च वकारे स्वरिते सति ३ दीर्घेऽपि चोभयोः क्षेप इति शास्त्रव्यवस्थितिः । अस्यार्क्षः । मकारेमुष्टिः । नकारे अङ्गुष्ठेन तर्जनीनखग्रहणम् । ककारे टकारे ङकारे णकारे पदपाठे वृषणवस्वित्यादौ च तर्जनीमधो नामयेत् । पकारे पञ्चाङ्गुलिमेलनम् । तकारे कुण्डलाकारः । एते प्रकाराः पदान्तीयेषु सर्वत्र । उदात्तात्परे विसर्गे तर्जन्याः प्रसारणम् । अनुदात्तात्प्रचयाच्च परे कनिष्ठिकायाः प्रसारणम् । ह्रस्वात्स्वरितात्परे चोभयोस्तर्जन्यकनिष्ठिकयोः प्रसारणम् । दीर्घात्स्वरितात्परे विसर्गे कनिष्ठिकायाः क्षेपः । वकारयुक्ताद्दीर्घादपि परे चोभयोः । यकार युक्ताज्जात्यस्वरिताद्दीर्घादप्युभयोः । इत्यङ्गुलिप्रदर्शनीयविषया निरूपिताः ॥

अनुस्वारविषयो व्याख्यायते ॥ अनुस्वारꣳ रोष्मसु मकारः १ मकारोऽनुस्वारमापद्यते रेफसहितोष्मपरेषु । यथा अपाम् रसेन । अपांरसेन । त्वाम् । शश्वन्तः । त्वांशश्वन्तः । देवम् सवितारम् ।

देवꣳ सवितारम् । उरुम् हि । उरुꣳ हि ।
तथाच प्रतिज्ञासूत्रे । अनुस्वारस्य ꣳ मित्यादेशः
शषसहरेफेषु तस्य त्रैविध्यमाख्यातं
ह्रस्वदीर्घगुरुभेदैर्दीर्घात्परो ह्रस्वो ह्रस्वात्परो दीर्घो गुरौ
परे गुरुः । अनुस्वारस्य स्थानेꣳ इत्यादेशो भवति
शषसहरेफेषु परेष्विति शेषः । यथा त्रिꣳशत् ।
हवींषि । पयांसि । दृꣳहस्व । सꣳरायः ।
ह्रस्वादक्षरात्करो दीर्घः । गुरौ परे नाम संय्युक्ताक्षरे
परे गुरुर्भवति । क्रमेणोदाहरणानि ।
दीर्घात्पराद्ध्रस्वो यथा । पृथिव्व्यांशतेन । यजूंषि
। ससृवांसम् । अङ्गां हविषा । इषां रयीणाम् ।
ह्रस्वात्परो दीर्घो यथा त्रिꣳ शद्धाम । सर्वꣳ
षडिति । भूयासꣳ सुगृहपतिः । सꣳ रायस्पोषेण
। गुरौ परे गुरुर्यथा । भेषजं श्रिया । दंष्ट्राब्भ्याम्
। सोमानं स्वरणम् । सिंह्यसि । ऋकारसंयोगे परे
दीर्घ एव भवति न तु गुरुः । उक्तं च
कात्यायनशिक्षायाम् । अनुस्वारस्य ꣳ कार
आदेशश्छन्दसि स्मृतः । ऊष्मरेफेषु परतस्तस्य
त्रैविध्यमुच्यते १ ह्रस्वाद्दीर्घो दीर्घाद्ध्रस्वो गुरौ च
परतो गुरुः । ऋकारपर ऊष्मान्तो दीर्घाद्दीर्घोऽपि
जायते २ तथा चामोघनन्दिनीशिक्षायाम् ।
अनुस्वारो द्विमात्रः स्यादृवर्णव्यञ्जनोदये । ह्रस्वाद्वा
यदि वा दीर्घाद्द्विवानार्ꣳ हृदये यथा ३
सꣳसृष्टजित्सꣳसृष्टां संयोगे ह्रस्व इष्यते ।
इत्यनुस्वारविषयः । अयानुस्वारेऽङ्गुलिप्रदर्शनविचा
रः । तथा च मल्लकविकृतसर्वसङ्ग्रहहस्तस्वरप्रक्रि

याग्रन्थे । दीर्घे तु देशिनी त्याज्या क्षिप्रं स्याद्द्विलके लघौ ४ अस्यांर्थः । अनुस्वारप्रकरणस्थत्वाद्दीर्घे अनुस्वारे देशिनो प्रदेशिनी त्याज्या निष्कास्या । द्विलके गुरौ लघौ ह्रस्वे च अनुस्वारे क्षिप्रं स्यात् । क्षिप्रं नाम अग्निमकारिकायामेवोक्तम् । तर्जन्याः पृष्ठसंश्लिष्टमङ्गुष्ठं चाग्रनामितम् । तं क्षिप्रं हि विजानीयात्स्वरविद्भिरुदीरितम् ५ अयं भावः । लघौ अनुस्वारे गुरौ अनुस्वारे च तर्जन्याः पृष्ठमङ्गुष्ठाग्रेण नामितं कार्यम् । इदमप्यनुस्वारेङ्गुलिक्षेप इति सामान्येनोक्त्वा अङ्गुष्ठाकुञ्चनं लघावनुस्वारे त्वपां रसम् । दीर्घे ङ्गं च तर्जन्याः प्रसारः परिकीर्त्तितः ६ इत्यनया दीर्घेऽनुस्वारे रङ्गे च तर्जन्न्याः प्रसारणं तदन्ये ह्रस्वे गुरौ चानुस्वारेऽङ्गुष्ठाकुञ्चनमिति भगवता याज्ञवल्क्येन प्रतिपादितेन शास्त्रेणाप्यविरुद्धं भाति । तर्जन्याकुञ्चनं तु बाध्याभावाद्विशेषविहितत्वाच्च भवति । अत एव विद्वांसोऽपि दीर्घेऽनुस्वारे तर्जन्याः प्रसारणम् । लघौ गुरौ चानुस्वारे तर्जनीपृष्ठेऽङ्गुष्ठं नामयति । स्पर्शे परपञ्चमम् ३ मकारः स्पर्शे परस्य पञ्चममापद्यते । हिङ्काराय । अहङ्क्नामि । इषुङ्गिरिशन्तेत्याद्युदाहरणं बोध्यम् । परसवर्णेषत्प्रकृत्त्या ४ परस्य वर्णस्य किञ्चित्तत्सहशोच्चारणीयम् । अन्तस्थामन्तस्थास्वनुनासिकां परसस्थानाम् ५ अन्तस्थामन्तस्थासु परासु परेण समानस्थानामनुमासि कामन्तस्थामापद्यते । तंय्यज्ञम् । संव्वपामि । तंल्लोकम् । तकारो ले लम् ६ तकारो लकारे

लकारमापद्यते । आसील्लोकम् । परिचिल्लोकम् । नुष्ठानुनासिकम् ७ नकारो लकारे परे अनुनासिकं लकारमापद्यते । अस्मिंल्लोके त्रींल्लोकान् । स्वरश्छकारे चकारेण सर्वत्र ८ स्वरः छकारे परे चकारेणागमिकेन स विधीयते पदादिमध्यान्तेषु । अच्छावदामसि । माच्छन्दः । जगतीच्छन्दः ॥ यस्याति हायसहेति न ९ एतेषान्न । सहछन्दसः । अतिहायछिद्रा यस्य छाया । ङ्नौ क्ताभ्यां सकारे १० ङकारनकारौ यथासङ्ख्यं ककारतकाराभ्यां व्यवधीयेते सकारे परे ॥ प्राङ्ङक्सोमः । समुद्द्रान्त्समसृपत् । उदस्तभाने लोपम् ११ उदः परः स्तभानशब्दीयसकारो स्लोपमापद्यते । उत्तम्भान । तस्मादित्त्युत्तरस्यादेरित्यस्मिन्सूत्रेऽव्यवहितस्येत्युक्तत्वात् । उद्दिवंस्तभानेत्यत्र न सकारलोपो भवति । भाव्युपधश्चरिद्विसर्जनीयो रेफे लुप्यते दीर्घश्चोपधा १२ भाविसञ्ज्ञोपधो रिफितश्च विसर्गो रेफे परे लुप्यते उपधा च दीर्घमापद्यते । व्वसुभीरुद्द्रैः । जटायामुदाहरणम् । अन्तारुक्क्मः । नीरपांसि । रुरूरौद्रः । धातूरायः ॥ रेफं स्वरधौ । १३ भाव्युपधो रिफितश्च विसर्गः स्वरे परे धिसञ्ज्ञके च परे रेफमापद्यते । पृश्निरक्क्रमीत् । व्वायुरनिलम् । अग्निर्मूर्द्धा । त्वष्टुर्जामातः । अहर्जिन्व । अहरभकारपरमित्युक्तत्वात् । शुद्ध्यतु शमहोभ्यः । स्वर्द्यौरिव । पदादिश्चाजित्पर इत्युक्तत्वात् । स्वर्ग्ग्याय । अनरणे इत्युक्तत्वात्स्वाय चारणाय च । अजित्परत्वात्प्राप्तस्य निषेधः ॥ कण्ठ्यपूर्वो

यकारमरिफितः १४ रिफितभिन्नः कण्ठ्यपूर्वो विसर्गो यकारमापद्यते स्वरे परे । यऽ इमा व्विश्श्वा । शुष्म्माऽ ओषधीनाम् । यवयोरिति लोपः ॥ लोपन्धौ १५ अरिफितः कण्ठ्यपूर्वो विसर्गो ल्लोपमापद्यते धौ परे । देवा देवैः । अयक्ष्मा मा ॥ भूमेश्चाकारेऽपृक्ते १६ भूमिशब्दसम्बन्धो विसर्गो लोपमापद्यते अपृक्ताकारे परे । भूम्याददे ॥ सर्वो अकार ओकारम् १७ ह्रस्वाकारपूर्वो अरिफितो विसर्गः सोपध ओकारमापद्यते धौ परे । लोपं धा वित्यस्यापवादः । देवो देवैः देवो वः सविता ॥ अकारे च १८ अरिफितो ह्रस्वकण्ठ्यपूर्वो विसर्गः सपूर्व ओकारमापद्यते अकारे परे । स्तुपोऽसि । कृष्णोऽसि ॥ स्वोरुहावहश्च रात्र्याम् १९ स्वरित्ययं रुहे अहरित्ययं रात्रिशब्दे परे सपूर्व ओकारमापद्यते । स्वोरुहाणः । अहोरा त्रयोः ॥ चछयोः शम् २० विसर्गश्चछयोः शमापद्यते । इन्द्रश्श्च । प्रजापतिश्छन्दः ॥ तथयोः सम् २१ विसर्गस्तथयोः समापद्यते । कस्त्वा । नमस्ते ॥ अविकारꣳ शाकल्यः शषसेषु २२ एषु विसर्गो विकारन्नापद्यते शाकल्यमतेन । व्वायव्याः श्वेताः ॥ अग्नीषोमयोः षष्ठी । व्वानस्प्पत्त्यः ॥ प्रकृत्त्या कखयोः पफयोश्च २३ कखयोः पफयोश्च परयोर्निवसर्गः प्रकृत्त्या भवति । सिमाः कृण्वन्ति ततः खनेम । व्वसोः पवित्रम् । याः फलिनोः ॥ तस्मिंल्लल्हजिह्वामूलीयोपध्मानी यनासिक्या न सन्ति माध्यन्दिनानाम् २४ इति पाणिनीयसूत्रैः प्राप्ताः प्रतिषेधा बोध्याः ॥ लुङ्गुदि

जित्परे २५ जित्सञ्ज्ञके परे मुत्सञ्ज्ञके च परभूते विसर्गो लुप्यते । अमृतास्तुताः । ऊर्ज्जस्त्य ॥ उपवसने पीवः २६ अयं विसर्गो लुप्यते उपवसने परे । पीवोपवसनानाम् ॥ स ओषधीमयोः २७ स इति विसर्गो लुप्यते ओषधीशब्दे इमशब्दे च परे । सौषधीरनु । सेमान्नः व्यञ्जने च २८ स इत्ययं विसर्गो लुप्यते व्यञ्जने परे । स ते लोकः स पर्य्यगात् । स बोधि ॥ स्य एष च २९ स्यः एषः इमौ विसर्गौ लुप्येते व्यञ्जने परे । स्यरात्थ्यः । एषते । एषच्छागः ॥ स्य व्वाजी । एषस्य । इदं सूत्रद्वयं तथयोः समित्यादीनां बोधकम् । स्य व्वाजी स बोधीत्यादौ सर्वो अः कार ओकारमित्यनेन पूर्वान्विधीन्वाधते नोत्तराननिति न्यायेन विप्रतिषेधऽ उत्तरस्बलवदलोपे ३० इत्युक्तत्वादेतस्य बाधो मध्येऽपवादः प्राप्तः अलोप इत्युक्तत्वान्न भवति ॥ अनितावध्याये ३१ अधिकारोऽयम् । विधीयमानमागमविकारादिकार्यमितौ परे न भवति । उपस्थितं विना इति परत्वासम्मवात् । स्थितोपस्थितस्य तु एकविषयत्वादन्तः पदविकारागमविषयोऽयं निषेधः । अध्याये इत्यधिकारोऽवध्यर्थम् । अधिकारः किम् । तवस्तरमिति तवः । तरम् । इत्यादौ तथयोः समित्यादि भवति । अध्याये किम् । गोव्यच्छमिति गो । व्यच्छम् । इत्यादौ स्वरे भावीत्यादि भवति । अयं निषेधो विकारवतः पदस्यैव स्थितोपस्थिते नाद्यत्र तेन रायस्पोषद ऽ इति

रायस्प्पोष । दे । अत्र रायः सहस इति सकारो भवति । इति वच्चर्चायाम् ३२ पुनरुच्चारितं चर्चा । इतेः परं पदं तत्र इतौ परे यथा न भवति तद्वदेव ॥ ककारपकारयोः सकारम् ३३ भाव्युपधः षकारम् ३४ भाव्युपधो विसर्गः षकारमापद्यते । परिशेषात्कराठ्यपूर्वः सकारः ककारे च परे । अधिकारोऽयम् । उत्तरसूत्रेषु यथायोग्यमुभयोः सम्बन्धः ॥ आविर्न्निरिड इडाया वसतिर्व्वरिवः ३५ एतेषां षराणां विसर्गः ककारपकारयोर्यथायथं सकारं षकारं चापद्यते । आविष्कृणुष्व । अम्बनिष्प्पर । इडस्प्पदे । इडायास्प्पदम् । व्वसतिष्कृता । व्वरिवस्कृणोतु ॥ दिवोऽककुत्पृथिव्योः ३६ दिव इत्ययं विसर्गः कपयोः समापद्यते ककुत्पृथिवीशब्दौ वर्जयित्वा । दिवस्प्परि । दिवस्प्पुताय । दिवस्पृष्ठे । अककुदित्यादि किम् । दिवः ककुत् । दिवः पृथिव्याः ॥ रायः सहसस्प्पोषपुत्रयोः ३७ एतौ यथासङ्ख्यं पोषपुत्रयोः परयोः सकारमापद्येते । रायस्प्पोषे । सहसस्प्पुत्रः ॥ तमसोऽपरस्तात् ३८ कपयोरयं विसर्गः समापद्यते परस्ताच्छब्दं वर्जयित्वा । तमसस्प्परि । अपरस्तात्किम् । तमसः परस्तात् । तमसस्पृथिव्याम् ३८ अयं समापद्यते पृथिवीशब्दे । तपसस्पथिव्याम् । अद्ध्वनो रजसो रिषस्पृशस्प्पातौ ४० एते चत्त्वारः प्राधातौ सकारमापद्यन्ते । अद्ध्वनस्प्पातु । रजसस्प्पाति । रिषस्प्पाहि संस्पृशस्प्पाहि ॥ अद्ध्वनस्कुर्व्विति च ४१ एतन्निपात्यते सकमां२ऽ ॥ अद्ध्वनस्कुरु ॥

समानपदे च ४२ एकपदे विद्यमानो विसर्गः कपयोर्यथायथं सकारं षकारं चापद्यते इतौ परे चर्चायां च न । श्रेयस्कर । तपस्प्पतिः । हविष्कृत् । चतुष्प्पात् । स्थितोपस्थिते । श्रेयः करेति श्रेयः कर । तपः पतिरिति तपः । पतिः । जाःपत्त्यमितिजाः । पत्त्यम् । हविष्कृदिति हविः कृत् । चतुःपादिति चतुः । पात् । इत्यादि भवति ॥ परावसाने ४३ अवसानस्थिते परिशब्दे परे विसर्गः समापद्यते । ओषधयस्प्परि । अवसाने किम् । हेडः परि ते वृणक्तु ॥ कविः करत्कृधिषु ४४ एतेषु विसर्गः कृधिशब्दे सकारं षकारं चापद्यते । वसुष्कविः । श्रेयसस्करत् । पुनस्कृधि ॥ कृषीश्च कृधौ सकारम् ४५ कृषीरित्ययं विसर्गः कृधिशब्दे सकारमापद्यते । भाव्युपधत्वात्पूर्वसूत्रेण षकारे प्राप्ते विधिः । कृषीस्कृधि ॥ सदो द्यौर्न्नमस्कृतं पितापथेषु ४६ सद इत्यादीनां त्रयाणां विसर्गः कृतमित्यादिषु यथायथं सं षं चापद्यते । येषामप्सु सदस्कृतम् । उपहूतो द्यौष्प्पिता । शर्म्म सप्प्रथा नमस्प्यथे । पतितालव्यस्वरोदये पदे च ४७ तालव्यस्वरान्ते पतिशब्दे पदरूपे परे विसर्गः सकारमापद्यते । तालव्यस्वरोदय इति सम्मयाभिप्रायम् । ब्रह्मणस्प्पते । व्वाचस्प्पतये । व्वाचस्प्पतिम् । पदे किम् । तस्मिन्निति निर्द्दिष्ट इतिसप्तमोनिर्द्दिष्टवर्णविषयम् । अत्र चेदमेव ज्ञापकं पदावयवे व्यवहितस्यासम्भवात् । यतो जातः प्प्रजापतिः ॥ न परुषः परुषि ४८ परुष इत्ययं विसर्गः परुषि न सकारमापद्यते ।

समानपदे चेति प्राप्तस्य निषेधः । प्ररोहन्ती परुषः परुषः ॥ वाजपतिर्वासऽ एदिधिषुरन्तः पर्शव्व्येनान्तः पाश्श्वर्यमिति च ४६ कपयोर्व्वाजपतिरित्यादीनां त्रयाणां विसर्गो अन्तः पर्शव्येनेत्यादिपदद्वयसम्बन्धो च न विकारसमापद्यते । व्वाजपतिः कविः कविः कर दित्यस्य निषेधः । व्वासः पल्प्पूलीम् । एदिधिषुः पतिम् । अन्तः पर्शव्येन । अन्तः पाश्श्वर्यम् । समानपदै चेति प्राप्तस्य निषेधः । इति चेति अनुक्तसमुच्चयार्थं तेन जातः पतिरित्यत्र न सकारः । अहः पतौ रेफम् ५० अहरित्ययं विसर्गः पतिशब्दे परे रेफमापद्यते । समानपद इत्यस्यापवादः । अहर्प्पतये । स्थितोपस्थिते तु अहः पतयऽ इत्यहः । पतये । परश्च मूर्द्धन्यम् ५१ अधिकारोऽयम् । परश्चेति तऽआघादनाडम्बरादित्यस्मात्प्राक्मूर्द्धन्यमिति तमभि व्याप्य ॥ स्वर्ध्धूः सांसहयोः ५२ स्वः धूः इमौ यथा संख्यं साम् सह इत्येतयोः रेफमापद्यते परश्चे मूर्द्धन्यम् । स्वर्षामप्साम् । इतं धूर्षाहौ ॥ विकारी यथा सन्नमिति ईषद्विवृतत्वात्षकारः । स्थितोपस्थिते स्वः सामिति स्वः । साम् । धूः सहाविति धूः । सहौ ॥ उकारन्दुर्द्दे ५३ दुरित्त्ययं विसर्जनीयः उकारमापद्यते परश्च मूर्द्धन्यम् । धिसञ्ज्ञकत्वादसोष्मत्वान्निरनुनासिकत्वाच्च उकारः । परि ते दूडभः । स्थितोपस्थिते दुर्द्दभऽ इतिदुः । दभः । अध्याय इत्युक्तत्वादुपस्थिते रेफं स्वरधा विति भवति स्थिते तु न संहिताया अभावात् ॥ ओकारमितः सिञ्चतौ सोपधः ५४ इत इत्ययं विसर्गः

पूर्ववर्णसहित ओकारमापद्यते सिञ्चतौ परे परश्च मूर्द्धन्यम् । परीतो षिञ्चता सुतम् ॥ इति विसर्गसन्धिकार्यम् ।
अथ विसर्गाङ्गुलिप्रदर्शनप्रकारमाह भगवान्महर्षियाज्ञवल्क्यः ॥

Reference:
Vyāsa,Yugalakiśora, ed., *A Collection of Śikshās by Yājñavalkya and others, with commentaries on some of them*, Benares Printing Press: 1893, Benares, pp. 210-233.